पदावयवस्य रसव्यञ्जकतामुदाहरति—

पदैकदेशस्य च 'निखिलमिदं जगदण्डकं वहामि' इति करूपतद्धितो वीररसस्य प्रागेवोदाहृतः।

अवर्णात्मकरागादीनां व्यञ्जकता सहृदयानुभवसिद्धैवेति प्रतिपादयति—

एवं रागादिभिरपि व्यङ्ग्यत्वे सहृदयमेव प्रमाणम्।

उपसंहरति—

एवमेषां रसादीनां प्राधान्येन निरूपितान्युदाहरणानि।

गुणीभूतव्यङ्ग्यत्वे रसादीनामुदाहरणापेक्षायामाह—

गुणीभावे तु वक्ष्यन्ते, नामानि च।

तत्र विशेषमाचष्टे—

तत्र प्राधान्य एवैषां रसादित्वम्, अन्यथा तु रत्यादित्वमेव।

---

बलवीररसोदाहरणप्रसङ्गेन प्रागेवोदाहृतेऽत्र पद्ये 'जगदण्डक'मिति पदावयवकरूपस्तद्धितप्रत्ययो ब्रह्माण्डस्य क्षोदिष्ठता द्वारीकृत्योत्साहस्यायिबलवीररसस्य व्यञ्जकइत्यर्थः।

व्यङ्ग्यत्वे रसादीनामिति शेषः। रागादिव्यञ्जकता सहृदयानुभवसाक्षिकैवेति-तदुदाहरणं न प्रदर्शितमित्यर्थः।

एवमुक्तरीत्या, एषां रसादीनां प्राधान्येन ध्वनितया प्राङ् निरूपितानामुदाहरणानि निरूपितानि ज्ञेयानीत्यर्थः।

रसादीनां गुणीभावेऽप्राधान्ये गुणीभूतव्यङ्ग्यतायामुदाहरणानि रसवत्प्रेयऊर्जस्व्यादीनि नामानि चालङ्कारप्रकरणे वक्ष्यन्ते प्रतिपादयिष्यन्त इत्यर्थः।

एषां रसादीनां प्राधान्य एव विगलितवेद्यान्तरसच्चिदानन्दस्वरूपतासम्पत्ते रसादित्वं भवति अन्यथाऽप्राधान्ये तु तादृग्रूपताविरहात् स्थायिमात्रात्मकत्वाद् रत्यादित्वं केवलं भवतीत्यर्थः।

---

पण्डितराज रचित पाँचों लहरियाँ (करुणालहरी, गंगालहरी आदि) भाव-व्यञ्जकता के उदाहरण होती हैं।

'निखिलमिदं' जगदण्डकं वहामि यहाँ करूप तद्धित (पदैकदेश) वीररसव्यञ्जक है यह भी पहले (पृ० १६३ में) कहा जा चुका है।

इसी तरह अवर्णात्मक राग आदि भी रसादि के व्यञ्जक होते हैं—इसमें सहृदयों के हृदय ही प्रमाण हैं।

इस तरह से प्रधान रहने के कारण ध्वनिरूप रसादिकों के उदाहरण निरूपित हो चुके यह समझना चाहिये।

जब ये रस आदि गौण—अप्रधान—हो जाते हैं, तब उनके क्या क्या नाम पड़ते हैं और उनके उदाहरण क्या हो सकते हैं, ये सब बातें आगे कही जायगी—अर्थात् रस आदि के गौण हो जाने पर 'रसवत्' प्रेय और ऊर्जस्वि इन नामों के अलंकार होते हैं, यह बात तथा उनके उदाहरण अलंकार प्रकरण (द्वितीय आनन) में कहे जायँगे। (खेद यह है कि पण्डितराज की यह प्रतिज्ञा पूर्ण नहीं हो सकी। यह ग्रन्थ अपूर्ण ही उपलब्ध होता है और जितना भाग उपलब्ध है, उसमें यह विचार नहीं आ सका है)

ननु गुणीभावे यदि रसादित्वाभावो भवेत्, तर्हि गुणीभूतरसस्य रसवदलङ्कारेति नाम्नि रसपद कथमुपात्तमित्याशङ्कायामाह—

नामनि रसपद तु रत्यादिपरमित्येके। अस्त्येव रसादित्वं, किन्तु न ध्वनि-व्यपदेशहेतुत्वमित्यपरे।

इति तैलङ्गपण्डितराजश्रीजगन्नाथविरचिते रसगङ्गाधरे प्रथममानन सम्पूर्णम्।

---

रसवदलङ्कारेति नामघटकरसपदस्य रसत्वयोग्यरत्यादिस्थायिभावेषु लक्षणेति प्रागुक्तनियमाङ्गीकर्तॄणां केषाञ्चिन्मतम्। अन्येषां तु—रसादीनामप्राधान्ये न रसादित्वस्य विलोप, किन्तु प्राधान्यविरहाश्च ध्वनिव्यवहारस्य कारणत्वमिति मतम्। तत्र पूर्वमत एव लक्षणापेक्षा, नतूत्तरमत इति बोध्यम्।

विद्यानामिकेतन-मिथिलाऽन्त—पातिसरिसवग्रामे ।
विद्यानाथसुतश्रीवदरीनाथेन निर्मिता कुतुकात् ॥ १ ॥
राधाऽच्युतपदनखविधु-समर्पिता चन्द्रिका सेयम्।
लभतां रसगङ्गाधर-संसक्ता शाश्वती सुषमाम् ॥ २ ॥
आशानखमित (२०१०) विक्रम-समासह—पूर्णिमासूर्ये।
रसगङ्गाधर-विवृतिर्वाणीकृपयाऽगमत् पूर्तिम् ॥ ३ ॥
चिन्ताजरादि-पण्डीकृतपण्डास्यापि मे नूनम्।
साहसमेव विवरण, पण्डितराजातिगूढमणितीनाम् ॥ ४ ॥
उपकृतिरितोऽपि तावत्, किन्तु भवदेव केषाञ्चित्।
मदपि न्यूनमतीनामिति प्रतीते समाश्वसिमि ॥ ५ ॥

इति मैथिलश्रोत्रियपण्डितश्रीवदरीनाथशर्मनिर्मितायां रसगङ्गाधर-चन्द्रिकायां प्रथममानन सम्पूर्णम्।

---

यहाँ भी विद्वानों में मतभेद है। कुछ विद्वानों का कथन है कि ये रस आदि प्रधान रहने पर ही रसादि हैं और गौण हो जाने पर रत्यादिमात्र अर्थात् वस्तुमात्र होते हैं।

यदि कहें कि जब गौण हो जाने पर ये रसरूप नहीं होते, तब उस अवस्था के 'रसवत्' इत्यादि नामों में रस आदि पदों का प्रयोग कैसे होता है? इसका उत्तर यह है कि उन नामों में रसादि पद रत्यादि का ही बोधक है। यहाँ दूसरे विद्वानों का कथन इससे भिन्न है, वे कहते हैं कि गौण हो जाने पर भी उनमें रसत्व अथवा भावत्व रहते ही हैं, केवल गौण हो जाने के कारण वे काव्य में ध्वनि व्यवहार के हेतु नहीं होते।

इति दरभङ्गामण्डलान्तर्गत नरौनी ग्रामनिवासी, मैथिलब्राह्मणवंशावतंसव्याकरण-न्याय-साहित्याचार्य, मुजफ्फरपुरस्थ राजकीय संस्कृत महाविद्यालय प्रधान-साहित्याध्यापक 'पं० श्रीमदनमोहन झा' द्वारा निर्मित रसगङ्गाधर (प्रथम आनन) की हिन्दी व्याख्या समाप्त हुई।